***प्रथम संस्कृत संस्करण :*** अगस्त 2015 श्रावण 1937

***पुनर्मुद्रण :*** जुलाई 2020 श्रावण 1942



**PD 153T RPS**

**पुस्तकमाला निर्माण समिति**

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक (संस्कृत)** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकन:** जोएल गिल **सज्जा तथा आवरण**– निधि वाधवा

**संस्कृत समीक्षा समिति**

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत*, दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत*, संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर*, साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष*, संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक*, सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टैंट प्रोफ़ेसर*, व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**आभार ज्ञापन**

प्रो. बी.के.त्रिपाठी, *निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक*, केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष*, संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष*, प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110 016 द्वारा प्रकाशन प्रभाग में प्रकाशित तथा बंगाल ऑफ़सेट वर्क्स, जी-181, सैक्टर-63, नोएडा 201 301 द्वारा मुद्रित।

**ISBN** 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-385-8

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षायाः बालानां कृते वर्तते। अस्याः अभिप्रायः – 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्याः पुस्तकमालायाः कथाः चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ताः सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्यः दैनन्दिन्यः लघुलघुघटनाः कथा इव रुचिकराः प्रतीयन्ते। अतः वर्षा-मालिकायाः सर्वाः कथाः दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्याः पुस्तकमालायाः अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्यायाः प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षकाः वर्षा-मालिकां कक्षायाम् तथा स्थापयेयुः येन बालाः सुखेन पुस्तकानि ग्रहीतुं शक्नुयुः।



**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

***प्रकाशन सहयोग***

अध्यक्ष, प्रकाशन प्रभाग : *अनूप कुमार राजपूत*
मुख्य उत्पादन अधिकारी : *अरुण चितकारा*
मुख्य संपादक : *श्वेता उप्पल*
मुख्य व्यापार प्रबंधक : *विपिन दिवान*

# मातामह्याः उपनेत्रम्





मातामही



मुनमुनः



रमा




एषा रमायाः मातामही अस्ति।
रमायाः मातामही सर्वदा उपनेत्रं धारयति।
मातामह्याः पुस्तकानां पठने अभिरुचिः अस्ति।
मातामही प्रतिदिनं प्रातः वार्तापत्रं पठति।





एकस्मिन् दिने मातामही प्रातः एव रमाम् उत्थापयितुं प्रायतत।

मातामही उपनेत्रं न लभते स्म।

उपनेत्रं विना मातामही कष्टम् अनुभवति स्म।

सा आवश्यकानि वस्तूनि अन्वेष्टुं समर्था न आसीत्।



रमा गाढनिद्रायाम् आसीत्।
सा निद्रां न त्यजति स्म।
मातामही रमां अति-स्नेहेन उत्थापितवती।
सा रमाम् उपनेत्रम् अन्वेष्टुम् उक्तवती।

रमा निद्रायाम् एव उपनेत्रम् अन्वेष्टुम् आरभत।
सा उपधानानाम् अधः उपनेत्रम् अन्विष्टवती।
मातामही बहुवारं तत्र उपनेत्रं स्थापयति स्म।
उपनेत्रम् उपधानानाम् अधः न लब्धम्।




मातामही रमां समयम् अपृच्छत्।

रमा अवदत्-लघु-सूचिका पञ्चमे अङ्के दीर्घसूचिका चतुर्थे अङ्के च अस्ति।

प्रायशः सार्ध-पञ्चवादन-समयः आसीत्।

मातामह्या वार्तापत्रं पठनीयम् आसीत्, भ्रमणाय च गन्तव्यम् आसीत्।





रमा मातामह्याः उत्पीठिकायां पुस्तकानां मध्ये उपनेत्रम् अन्विष्टवती।
मातामही उत्पीठिकायां स्थित्वा वार्तापत्रं पुस्तकानि च पठति।
प्रायेण सा पुस्तकानां मध्ये उपनेत्रं त्यजति।
उपनेत्रम् उत्पीठिकायां न आसीत्।





रमा उपनेत्रं स्नानागारे अन्विष्टवती।
स्नानागारे बहूनि वस्त्राणि आसन्।
मातामही यदा कदा उपनेत्रं स्नानागरे त्यजति स्म।
उपनेत्रं स्नानागारे अपि न आसीत्।




रमा उपनेत्रम् अङ्गने अन्विष्टवती।
अङ्गने बहूनि वस्तूनि आसन्।
मातामही प्रायः अङ्गने खट्वायाम् उपनेत्रं त्यजति स्म।
उपनेत्रं खट्वायाम् अपि न लब्धम्।





रमा मातामह्या: ऊर्ण-स्यूते उपनेत्रम् अन्विष्टवती।
स्यूते ऊर्णाया: अनेकानि गोलकानि आसन्।
तस्मिन् अर्ध-वयनितानि ऊर्ण-वस्त्राणि अपि आसन्।
उपनेत्रं स्यूते अपि न आसीत्।





रमा उपनेत्रं दर्पणस्य निकटे अन्विष्टवती।
तत्र कङ्कतिकाः तैलकूप्यः च आसन्।
मातामही प्रायः केशानां प्रसाधन-समये उपनेत्रम् अवतारयति स्म।
उपनेत्रं दर्पणं निकषा अपि न आसीत्।





रमा उपनेत्रं कपाटिकायाम् अन्विष्टवती।
कपाटिकायां मातामह्याः शाटिकाः आसन्।
मातामही बहुवारम् उपनेत्रं कपाटिकायां त्यजति स्म।
उपनेत्रं कपाटिकायाम् अपि न आसीत्।





उपनेत्रम् अन्वेष्टुं रमा पर्यङ्कस्य अधः प्रविष्टा।
पर्यङ्कस्य अधः मुनमुनः उपविष्टा आसीत्।
मुनमुनस्य पादयोः मध्ये किमपि आसीत्।
तत् सम्यक् न दृश्यते स्म।







रमा मुनमुनं बहिः अकरोत्।
मुनमुनेन सह मातामह्याः उपनेत्रम् अपि आगतम्।
रमा सत्वरम् उपनेत्रं गृहीतवती।
सा उपनेत्रं गृहीत्वा मातामह्याः समीपम् अधावत्।





मातामही उपनेत्रं दृष्ट्वा अति-प्रसन्ना जाता।
सा उपनेत्रं धारितवती।
सा वार्तापत्रं पठितुम् उपविष्टवती।
मातामही चिरं यावत् वार्तापत्रम् अपठत्।





मातामही रमां भ्रमणाय आहूतवती।
रमा उपनेत्रं मुनमुनम् अधारयत्।
मुनमुनः उपनेत्रं धृत्वा अति-शोभना दृश्यते स्म।
तदनन्तरं ताः तिस्रः भ्रमणाय निर्गताः।

# रमा-रान्योः अपराः कथाः



















